THE

HARIDĀS SANSKRIT SERIES

52

# Svapnavāsavadaṭṭa

Of

BHĀSA

*Edited by*

Sāhityaācharya

Pandit S'ri Anantarāma S'āstri Vetāl

with his own Sanskrit Commentray

THE PRABODHINĪ

*and with*

THE PRAKĀS'A HINDI COMMENTARY

*By*

Sāhityaācharya

Pandit S'ri Jagannāth S'āstri Hos'ing.


PUBLISHED BY

JAYAKRISHNA DAS HARIDAS GUPTA,

*Chowkhamba Sanskrit Series Office,*

Benares City.

[ *Third editon.* ] [ 1925

※ श्री ※

→※ हरिदास-संस्कृत-ग्रन्थमाला ※←

५२

श्रीः

महाकविश्रीभासप्रणीतं

# स्वप्नवासवदत्तं

नाम

## नाटकम्

साहित्याचार्येण श्रीमदनन्तरामशास्त्रिवेतालेन

स्वोपज्ञया **प्रबोधिनी**नामिकया संस्कृतव्याख्यया

सह सम्पादितम् ।

साहित्याचार्यश्रीजगन्नाथशास्त्रिहोशिङ्गकृत-

**प्रकाश**नामकहिन्दीभाषान्तरेण सनाथीकृतम् ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

**चौखम्बा संस्कृत सीरिज़ आफिस,**

बनारस सिटी ।

तृतीयं संस्करणम् ] [ वि० संवत् २००२

॥ श्रीः ॥

# समर्पणम् ।

श्रीमद्गुरुवरलक्ष्मीललितं गङ्गाधराऽङ्कसञ्जातम् ।
वन्दावहे प्रतीक्ष्यं भक्त्या श्रीभालचन्द्रविबुधेन्द्रम् ॥ १ ॥
साहित्यकाननाऽन्तर्विहरन्तो विबुधसिंहतां यान्तः ।
दुर्वादिमत्तकुञ्जरकुलं जयन्तो जयन्त्यमी गुरवः ॥ २ ॥
श्रीमत्सद्गुरुकरुणाऽमृतवल्लीसङ्गतं फलं तदिदम् ।
श्रीचरणयोः पुरस्तात् परोपकारैकतत्परयोः ॥ ३ ॥
श्रीमद्गुरुवरभक्तिप्रभावलब्धाऽणुगुणलेशौ ।
सविनति समर्पयेते अनन्तरामस्तथा जगन्नाथः ॥ ४ ॥

* श्रीः *

## अत्र किञ्चिद्वक्तव्यम् ।

एतत्किल नाटकं स्वप्नवासवदत्तं नाम भासकर्तृकतया प्रसिद्धमपि महाकविभिः श्रीवाग्देव्या हासत्वेन वर्णितान्महाकवेः श्रीभासादनुद्भूतमिव प्रतीयमानमरसमसंविधानकसौष्ठवलेशं च्युतसंस्कृतादिदोषबहुलमपि तत्सुदैवोदयात्परीक्ष्यग्रन्थेष्वन्यतमतया निवेशितं विना टीकासाहाय्येन विद्यार्थिनां नोपकाराय प्रभवेदित्यालोच्य श्रीचौखम्बासंस्कृतपुस्तकालयाध्यक्षेण जयकृष्णदासश्रेष्ठिना संप्रार्थितेनाऽस्मत्प्रियान्तेवासिना साहित्याचार्येण वेतालोपाभिधेन श्रीमदनन्तरामशास्त्रिणा प्रबोधिनीनाम्न्याऽभिनवटीकया सनाथीकृतं विलोक्य किञ्चिदुल्लसिमि ।

सेयं टीका सौशील्येनैतन्नाटकदोषान् यावच्छक्यं समाधातुं प्रवृत्ता ऽ ेपदमतिस्फुटं व्याख्यानसरण्या कोषव्याकरणादिसमुचितसन्निवेशनैश्च मूलं विशदीकुर्वती विद्यार्थिनां भृशमुपकरिष्यतीति मन्ये ।

काशी । १६-६-३६

महामहोपाध्यायो

लक्ष्मणशास्त्री तैलङ्गः ।

|| श्रीः ||

# भूमिका ।

सम्प्रति प्राकाश्यं नीयते श्रीमद्भासकर्तृकतया प्रख्यातिमायातं **स्वप्नवासवदत्तं** नाम नाटकं स्वोपज्ञटीकया **प्रबोधिनी**नाम्न्या सनाथीकृतम् । टीकानिर्माणशैली च पुरातनकालादनुगताऽद्यापि पूर्वतोऽपि प्राचुर्येण प्रचलिता दृश्यते । पुरा हि प्रायो दुरूहग्रन्थेषु तादृशप्रगाढपाण्डित्यप्रकर्षाणां विदुषामेव विशिष्टटीकाप्रणयने प्रवृत्तिरासीत् । अद्य तूत्साहवन्तोऽनन्ताः सुगमतया सम्भाविते दुर्गमे मार्गेऽस्मिन्नवतरन्तस्तत्र तत्रोपलभ्यन्ते । यथाकथमप्यस्तु नाम तत्तेषां निर्माणकौशलम् । ते तु विषयेऽस्मिन्नुत्थानमाहसं विदधतस्तावन्मात्रेण सन्तुष्टाः कृतार्थम्मन्या भवन्ति । अत्र किल कार्ये कुतोऽपि प्रवृत्तमेकमवगत्य स्वीयं पाण्डित्यमुन्नाटयन्नन्योऽपि जनस्तत्रैव प्रवर्तते । हन्त ! सोऽयं कुत्रापि किञ्चिद् बुद्धेः पदवीमप्रविष्टमसङ्गतं पश्यन् स्वच्छन्दं प्रसिद्धपाठपरिवर्तनमेव पौरुषं मन्यते । भूयसां ग्रन्थानां स्वोपज्ञाभिर्निःसाराभिर्व्याख्याभिरलङ्करणमेव परं पराक्रमं कल[illegible] । अत्रार्थे च तत्प्रवृत्तिः केवलं स्पर्धामूलिकैव प्रतीयते । कुत्रापि विचारणीयं विषयमापतितं दृष्ट्वा तदर्थमसाधारणं पुरुषविशेषं स्वयमाश्रयन्नपि तादृशं कुर्वाणमन्यमुपहसन्न नाम लज्जते वराकः । आक्षेपविषयतां नीतमेव कञ्चित्प्रच्छन्नाक्षेपयोग्यमात्मानं न मन्यते । हन्त ! विचित्रोऽयं पन्थाः । अस्मिन्किल परस्परसंमर्देऽत्यर्थमुपस्थिते कया नाम टीकयाऽस्माकमुपकारो भवेदित्यनवगच्छन्तश्छात्रवृत्तयो जना मुह्यन्तो यां कामपि तां गृह्णन्ति वस्तुतत्त्वाऽनभिज्ञा अन्ते वञ्चिताश्च भवन्ति परमार्थतः । एकस्मिन्ग्रन्थे बहवष्टीकाः, ताभ्योऽपि यथार्थबोधो न चेत्किं तत्र कथनीयम् । इत्थङ्कारमस्मिन्व्याख्यानिर्माणयुगे ग्रन्थस्य यथावद्भावमाविष्कुर्वत्यो

जगत्यतीव विरलास्ता दृष्टिपथं प्रयान्ति। भूयस्यो हि तादृश्य एव दृश्यन्ते, याभिर्मूलग्रन्थाः प्रत्युत दुरवबोधतामापाद्यन्ते।

आस्तां तावत्। प्रकृतमनुसरामः। अत्रापि प्रकृतग्रन्थे द्वित्रैः संख्यावद्भिर्व्याख्यानकौशलं प्रदर्शितम्। तदीयप्रतिभाप्रसूतास्तिस्रो व्याख्या अद्य यावदुपलब्धाः सन्ति। तासु च प्रसवक्रमेण गुणोत्कर्षेण च प्रथमतामधिगता कीर्तिकाय-महामहोपाध्याय-**श्रीगणपतिशास्त्रिभिरुद्**भाविता सुतरां समुद्भासते। एषा च टीका भूयिष्ठां प्रौढिमाटीकमाना तत्र तत्र स्थलेषु गूढं गभीरतरं विशिष्टं भावमुद्घाटयन्ती परिणतप्रज्ञैरेव संवेद्या। सुकुमारमतीना विद्यार्थिनां तु प्रवेशोऽत्र प्रायो दुःशकः। द्वितीया हि **सञ्जीवनी** नाम कविपण्डित**श्रीविजयानन्द**कृता हिन्दीभाषानुवादेन संवलिता विजयते व्याख्या। प्रायोऽर्थबोधने सर्वथा सरलाऽप्यसौ कथं नाम विद्यार्थिना ग्रन्थदुर्बोधतामपाकर्तुं समर्था भवेदिति प्राज्ञैरेव निरूपणीयम्। तृतीया तु **विजयानन्दखण्डूडीशास्त्रि**कृता **विजयवैजयन्ती**-समाख्या व्याख्या सुललितहिन्दीभाषानुवादेन समलङ्कृता तत्तत्पदार्थप्रतिपादनपुरःसरं भावं विशदीकर्तुमुद्यता विद्यार्थिजनोपकारमाधातुंप्रभवेदिति सम्भाव्यते। तुरीया चेयं **प्रबोधिनी** नाम **प्रकाश**नामकेन हिन्दीभाषानुवादेन सम्भूषिता विद्यार्थिनामर्थज्ञानसौकर्याय निरमीयत। 'निजमुद्देश्यं पूरयितुं कथङ्कारमेतया समर्थयाऽभूयते'त्येष विषयस्तु निष्पक्षं परीक्षणीयः प्रेक्षकैरेव।

'**काशीस्थराजकीयसंस्कृतपाठशाला**परीक्षासु तदधिकारिवर्गैरिदं प्राज्ञप्रशंसितं **स्वप्नवासवदत्तं** नाटकं परीक्षाग्रन्थेषु निवेशयिष्यत' इत्येवं चिरात्कर्णगोचरतामानीय विद्यार्थिजनोपकाराय **विद्याविलास**मुद्रणालयाधिपति-श्रेष्ठि**जयकृष्णदासगुप्त**महोदयेन तद्व्याख्यानिर्माणविधौ बहुधाऽनुरुद्धोऽहं पाठशालीयकार्यजातादत्यल्पावशेषेऽप्यवकाशे कथञ्चिदस्मिन् कर्मणि प्रावर्तिषि। मन्दंमन्दमद्य यावत्तदौपयिकमाचरन्कार्यमिदानीं मध्यमपरीक्षापाठ्येषु निवेशितमेतं ग्रन्थमगवत्य भूयसा परिश्रमेण श्रीमद्गुरूणां करुणया साऽतित्वरमिदं व्याख्यानं तदौपयिकसंशोधनकार्येण समं पूर्णतामनैषम्। परमेश्वरानुग्रहादद्येदं निर्विघ्नं मुद्रितं सौभाग्याद् ग्राहकाणां करकमलयोरलङ्कारतामधिगच्छति। 'प्रायेण बहवष्टीकाकारास्तत्र तत्र व्याख्यासु दुर्गममंशं परामृशन्तः सरलं तदंशं व्याख्यातुमुपेक्षन्ते। स्वबुद्ध्या सरलतयोपेक्षितानि व्याख्याविहीनानि स्थलानि मन्दबुद्धीनां दुर्ज्ञेयानि सन्ती'-

स्यालोच्य सर्वत्रैव व्याख्यानमत्राऽनुसृतम्। न तावत्कश्चिदप्यंशोऽस्मिन् व्याख्यया विनाकृतः ।

श्रूयते किल 'त्रिचतुरा विद्वत्तल्लजा ग्रन्थमेनं व्याख्यातुं प्रवृत्ताः सन्ती'ति। पदप्रयोगाणां वैलक्षण्येन कियत्यत्र दुष्करतेति तैरनुभूयत एव प्रायः। प्रगाढप्रतिभानां तेषां दुष्करत्वानुभवोऽपि वा दुःसम्भवः। तदीयप्रतिभाप्रसूभिर्गर्भगताः व्याख्याकन्यकास्ताः कदा प्रसविष्यन्त इति तदाकारदर्शनाय बाढमुत्कण्ठिताः स्मः। पूर्वजाः प्रबोधिनीप्रभृतयस्ताभिर्भगिनीभिः समं क्रीडितुमीहन्ते। आशास्यते च तासां मुखानि शीघ्रमेव नयनयोः पन्थानमायास्यन्तीति। अहमहमिकया च तत्र केचित्—'क्लिष्टमिदं नाटकं को नाम यथोचितं व्याख्यातुं क्षमिष्यते? सर्वतः पूर्वं प्रकाशितां मदीयामेव व्याख्यानसरणिं दृष्ट्वाऽन्यैरपि तत्साहाय्येनैव साफल्यमस्मिन्कर्मण्यासादयिष्यत' इति वचनं क्वचिदनेकवारमुद्गिरन्तः साभिमानं प्रलपन्तो महत्त्वं स्वीयमुद्घोषयन्ति। कारणवशात्तैरद्यापि तत्स्वरूपं प्रकाशयितुं न पारितं स्यादित्यलमप्रस्तुतार्थप्रस्तावेन।

अथैतन्नाटकनिर्मातृत्वेन प्रसिद्धिं गतस्य महाकवेर्**भासस्य** प्रसिद्धिविषये किञ्चिद्विचार्यते। **कालिदासो हि** कविकुलचूडामणिर्निजनिर्मित**मालविकाग्निमित्र**-प्रस्तावनायां 'प्रथितयशसां **भास**-सौमिल्लक-कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमान' इत्युदीरयन् प्रसिद्धकीर्तिमुत्तमप्रबन्धनिबन्धनधुरन्धरं प्राधान्येन **भासं** निरदिक्षत्। श्रीमद्भट्टबाणेनापि कविवर्णनप्रस्तावे स्वीये **हर्षचरिते**—

'सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे **भासो** देवकुलैरिव ॥'

इतीत्थमुपश्लोकितो **भासः**। श्रीमान् **राजशेखरो**ऽपि स्वकवित्वप्रशंसनावसरे—

'**भासो** रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
र्मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽप्यमी ॥'

इत्येवं प्राथम्येन **भासं** मुक्तकण्ठं प्रशंसति स्म। '**भास**कल्पितेषु रूपकेषु

श्रेष्ठत्वपरीक्षणाय प्रेक्षावद्भिरग्नौ क्षिप्तेषु, रूपकान्तरेषु भस्मसाद्भूतेषु **स्वप्नवासवदत्तं** नाम नाटकमनग्निदग्धं सत् काञ्चनवत् काञ्चिदनिर्वचनीया कान्तिं कलयाञ्चकारे'त्यपि स एव सरस्वतीपुत्रो **राजशेखरः**—

'**भास**नाटकचक्रेषु च्छेकैः क्षिप्ते परीक्षितुम् ।
**स्वप्नवासवदत्त**स्य दाहकोऽभून्न पावकः ॥'

इत्यनेन पद्येन प्रत्यपादयत् । **श्रीजयदेवस्तु**—

'यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
**भासो हासः** कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणश्च बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥'

इत्येवं भासकविं कविताकामिन्याः प्रसादसूचकहासत्वेन वर्णितवान् । इत्यादिभिस्तैस्तैरसाधारणगुणतया प्रसिद्धैर्वसुधालङ्कारभूतैर्भूतपूर्वैर्विपश्चिदपश्चिमैर्ग्रन्थकारैः कीर्तिरुद्धोषिता दृश्यते महती **भासस्य** । एतानि महाकवेरमुष्य वैदुष्य नामधेयं च सर्वतः प्रसिद्धिं नयन्ति प्रमाणान्युपलभ्यन्ते ।

समयेऽस्मिन् 'कोऽयं **भास**' इत्येष पुरस्तादुपस्थितो भवति प्रश्नः । केचिदत्र—'स एवायं **भासो** वर्तते, येन किल **शूद्रकनृ**पतेराज्ञया **मृच्छकटिकं** नाम नाटकं प्रणीय तन्नाम्ना प्रकाशित'मिति व्याचक्षते । '**मृच्छकटिकं** च **दण्डिनो** मुखान्निर्गत'मित्यपि केषाञ्चिन्मतम् । अस्तु तावदप्रसक्तोऽयं विषयः । 'मृच्छकटिकं शूद्रकेण तदितरेण वा प्रणीत'मित्ययं विचारो न तावदिदानीं करणीयः । कीर्तिकाय-म०म० **श्रीगणपतिशास्त्रि**णस्तु तमेवैतं स्वप्नवासवदत्तकर्तारं भासं निर्दिशन्ति, येन **मध्यमव्यायोग**प्रभृतीनि द्वादश रूपकाणि प्रणायिषत । एते खलु शास्त्रिणो दृढमिदं सिद्धान्तयन्ति, यत्—"**कालिदासा**दिभि**र्मालविकाग्निमित्रे**ष्विव प्रायो नाटककारैर्नाटकेषूपक्रमे स्वीयः परिचयो दीयते । **मध्यमव्यायोगा**दिषु कुत्रापि नात्मस्वरूपं तत्कर्तृतया परिचायितं कविनेत्येतदपि प्रत्यक्षमनुभूयते । 'भासनाटकचक्रेऽपी'ति पूर्वोक्त**राजशेखर**पद्येन च **भासेन स्वप्नवासवदत्त**मिव नाटकान्तराण्यपि निर्मितानीत्यपि सिद्धं भवति । सर्वेष्वमीषु रूपकेषु च प्रायः समानैव दृश्यते रचनाशैली । एतेन नूनमनुमीयते—नाटकानि सकलान्यमून्येकेन भासेनैव निर्मितानी"ति । सकलमिदमन्यदप्येतदोप-

यिकं तैः साटोपं विस्तरेण प्रतिपादितं **प्रतिमानाटकस्य स्वप्नवासवदत्तस्य** च भूमिकायाम्। अमुष्मिन् विषये विदुषां भूयांसो विचारा उपलब्धाः सन्ति। विप्रतिपत्तिपूर्णोऽयं विषयः। यथोचितप्रमाणानुपलम्भान्नात्रेदानीं किञ्चिदपि निर्णेतुं शक्यते। यत्किमपि कल्पयितव्यं मन्तव्यं च यथारुचि।

**स्वप्नवासवदत्तं** नाटकमुद्दिश्य 'इदम्—भासेन कृतम्, भासेन न कृतम्, अन्येन कृतम्' इत्येते त्रयः पक्षा उपक्षिप्ताः सन्ति तैस्तैः प्रेक्षावद्भिः। प्रथमः पक्षोऽत्र **श्रीगणपतिशास्त्रिणाम्**। एते तु 'स्वप्नवासवदत्तमिदं भासकृतमेवे'ति दृढमागृह्णन्। द्वितीयश्च पक्षो महामहोपाध्याय–सुरसरस्वतीलीलासदनायमान-गुरुवर–**श्रीलक्ष्मणशास्त्रि**प्रतीक्ष्यचरणानाम्। एतस्मिन्विषये 'श्रीमत्या वाग्देव्या हासत्वेन वर्णितस्य भासस्य वाणी कथमपि नेदृशी निःसारा नीरसा च भवितुमर्हति, यादृशी सा नाटकेऽस्मिन्प्रयुक्ता दृश्यते' इत्येष **आशयः** श्रीमद्गुरुचरणानाम्। द्रष्टव्यं च तदिदं तैः प्रकल्पिते ग्रन्थोपक्रमे प्रदर्शिते 'किञ्चिद्वक्तव्ये'। श्रीमद्भिर्यशोवपुषा वर्तमानैर्भूतलभूषणायितैः म०म० **श्रीरामावतारशर्म**पण्डितैरप्ययमेव पक्षोऽवलम्बित आसीत्। 'बहुत्र व्याकृतिसिद्धान्ताऽननुसारिणी क्लिष्टा विलक्षणा च रचनाशैली नाटकमिदं कवितावनिताहासायिताद्भासादनुद्भूतमिव निवेदयती'त्येतत्सहृदयाः प्रतिपद्यन्ते। '**श्रीराजशेखरेण भास**कर्तृकतया सूचितमनन्यसामान्यगुणं स्वप्नवासवदत्तं त्वन्यदेव स्यात्, रचनागुणेनास्य तत्त्वप्रतिपादनं नूनमनुभवाऽपलपनमेवे'त्येवमेतन्मतावलम्बिनां हार्दं तात्पर्यम्। यस्तावत्तृतीयः पक्षो 'नाटकमिदमन्येन कृत'मिति, तदवलम्बिनस्त्वेवं निरूपयन्ति–'चकियार–इति प्राप्तप्रसिद्धिभिः केरलदेशीयैर्नटैस्तत्तत्कविनिर्मितानां बहूनां नाटकानां कृतमस्ति संक्षिप्तं किमपि रूपान्तरं स्वल्पेन कालेन सुगमतया तत्प्रयोगं कर्तुकामैः। तत्र च रूपान्तरकरणप्रसङ्गे किमपि तैस्तत्रत्यं तथैव स्वीकृतमन्यच्च यदृच्छया बुद्ध्यनुसारं ततो निष्कासितं तथा स्वीयं तत्र नूतनं निवेशित'मिति। 'सप्तमे शतके कुशीलवाः केरलदेशीयास्ते परिवर्तितरूपाणि तानि नाटकान्यचीक्लृप'न्नित्येवमैतिहासिकाः प्रमाणयन्ति। एतेन—'**स्वप्नवासवदत्त**मिदं रूपान्तरतां प्रापितं तदेवे'ति पूर्वोक्ततृतीयपक्षावलम्बिनां विदुषामभिप्रायः स्फुटीभवति। सम्भवत्येतत्, यतोऽत्र परिवर्तितस्वरूपे नाटके क्वचिद्रचनाविषये प्रौढिः शैथिल्यं च कुत्राप्युपलभ्यते। अपप्रयोगा अपि नाऽसम्भवा अव्युत्पन्ननटनिर्मितेऽस्मिन्।

**अन्यच्च**—स्वप्नवासवदत्तादुद्धृत्य स्वीयेषु ग्रन्थेषु पुरातनैर्ग्रन्थकारैस्तन्नाम्ना निवेशितं यदत्रेदानीं नोपलभ्यते, तत्तदानीं परिवर्तनवशादपगतं स्यादिति । अयमेव पक्षस्तृतीयोऽत्रत्व आदरणीयकोटौ निविष्टो बहूनामेतद्ग्रन्थपरिशीलनशालिनां सङ्ख्यावताम् । भासनाटकचक्रोद्धारपरायणैः **श्रीगणपतिशास्त्रिभिः** खलु प्राचीनतमेष्वादर्शपुस्तकेष्वनुपलभ्यमानं स्वप्नवासवदत्तनाम्नाऽन्यत्रोद्धृतं श्लोकद्वयमत्र ग्रन्थे यथाप्रसङ्गप्रदर्शनं स्थलविशेषे निवेश्य तदेव प्रमाणीकृत्य 'नाटकस्यास्य कर्ता भास एवे'त्यभिधाय तत्रैव तत्साधने बाढं प्रयतितम् । किन्तु तदिदं श्लोकद्वयं ग्रन्थमध्ये क्वचिन्निवेशितमपि तदुद्देशपूर्त्यै नालम् । अनुकूलतर्काभावाद् 'भास एवास्य कर्ते'त्यनुमानं च न सम्यक् प्रतिभाति । ग्रन्थमध्ये निवेशनमपीह तयोः श्लोकयोर्नावश्यकम् , ताभ्यां विनापि तत्र तत्र पूर्वापरग्रन्थविरोधाभावात् । अत्र विषये तत्रैव प्रसङ्गे व्याख्यायां किमपि मीमांसितमस्माभिः । विलोकनीयमेतत् ( १३०, १६६-१६७ पृ० ) । किञ्चैवं विचारणीयम्—**'ध्वन्यालोकलोचने** (१५२पृ०) वाग्देवतावतारैः श्रीम**दाचार्याभिनवगुप्तपादैः**—

> 'सञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपतडनेन ।
> उद्घाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजा ॥'

इत्थमयं स्वप्नवासवदत्तीयः श्लोक उदाहरणरूपेणोद्धृतः । श्रूयतेऽन्यत्रापि किमपि कुत्रापि तन्नाटकनाम्नोद्धृतं वर्तत' इति । यद्येतत्सर्वं स्वप्नवासवदत्तीयं, तर्हि किमिति तन्नात्रोपलभ्यते, किमर्थं च तदेतन्न निवेशितमत्र कुत्रापि प्रसङ्गमुद्भाव्य **श्रीगणपतिशास्त्रिभिः** । तत्र तत्रोद्धृतानामत्राऽदर्शनात् स्फुटमेवेदम् , यदेतन्नाटकं श्रीमद्भासकृततन्नाटकाद् भूयोविभिन्नरूपमेवेति प्रामाणिकानां विश्वासः । कतिचन—'श्रीहर्षादेर्धावकादीनामिव धन'मित्यत्र वर्णितं **श्रीहर्षनृपते**रुच्यनुसारं **रत्नावल्यादि**निर्मातारं **धावकमेव भासं** मन्यन्ते । अन्ये तु नेदं रोचयन्ते ।

इत्थमयं नाटकस्यास्य कर्तृविषये विदुषां विमर्शो दर्शितः । अत्र कतमन्मतं ग्राह्यमिति तु सहृदया एव प्रष्टव्याः । यत्किमप्यस्तु, 'स्वप्नवासवदत्तं नाम किमपि नाटकं भासकविना प्रणीत'मिति तु निर्विवादमङ्गीकर्तव्यमेव सर्वैः ।

'एतन्नाटकस्य कर्तृत्वेन प्रसिद्धिमागतः सरस्वत्या हासत्वेन वर्णितोऽयं **भासकविः** स्वीयेन जन्मना भारतभुवं कदा भूषितवा'नित्येष प्रश्नो विचार-

णीय इदानीम् । 'किन्नाम कथं वास्योत्तरणं कल्पनीय'मिति परं बुद्धेः पन्थानं नारोहति । स्वकीयसमयसूचनविषयेऽवलम्बितौदासीन्यैः पूर्वैर्भूयोभिर्यथावदन्येषां करणीये तत्समयनिर्णये महदसौकर्यमापादितम् । इत्थं सति यथोपलब्धप्रमाणैः कस्यचित्समयनिर्धारणविषये किमपि केनापि, तदन्यप्रमाणैश्च तदन्येन ततोऽन्यथा कल्प्यते । प्रकृतकवेः समयोऽप्येवमेव कतिभिः प्रमाणैर्निर्धारणीयः । तथाहि—'**कालिदासेन मालविकाग्निमित्रे भासः** प्रशंसित' इत्यनेन कालिदासात्प्राचीनत्वं तु निर्विवादमेतस्य सिद्धम् । कालिदासस्य समयविषये यद्यपि भूयान्मतभेदस्तथापि प्रथमे वैक्रमे शतके तत्सत्तां बहवोऽभ्युपयन्ति । 'कालिदासकवेरस्तित्वसमये भासकवेरत्यधिका प्रसिद्धिरासी'दिति तु कालिदासकृतया भासकविप्रशंसयैव सूच्यते । प्रसिद्धिश्च भूयःसमयसापेक्षा । अतो वैक्रमशतकारम्भाच्छतवर्षेभ्यः पूर्वं **भासक**वेरवस्थानं नानुचितं मन्येत । '**कीथ** Keith' महोदयप्रभृतयस्तु **चन्द्रगुप्त**नृपतेः समये कालिदासं सम्भावयन्ति । चन्द्रगुप्तकालश्च निर्धारित ऐतिहासिकैः पञ्चमं वैक्रमं शतकम् । एतेन तृतीये चतुर्थे वा वैक्रमे शतके भासस्य सत्ता प्रतिपादिता भवति । अन्ये च—ग्रन्थोक्तैर्बहुभिरन्यैश्च प्रमाणैर्भासकविं चाणक्यात्पूर्वकालिकं मन्यन्ते । ईशवीयशतकारम्भतः प्राक् चतुर्थे शतके चाणक्योत्पत्तिरैतिहासिकैः कल्पिता । इत्यत ईशवीयशतकारम्भतः प्राक् पञ्चमे शतके महाकविर्भास आसीदित्युक्तं भवति । इत्थमन्यान्यानि प्रमाणान्यवलम्ब्य भासकवेः सत्तया पूर्वोक्तात्समयात्किञ्चिदग्रे पश्चाद्वा भवितुं शक्यते । अयमेव भासस्य काल इति निर्धारणं तु दुःशकप्रायम् । केचित्तु—ग्रन्थेऽस्मिन् पाणिनीयव्याकरणविरुद्धाऽपशब्दप्रयोगबाहुल्यदर्शनेन कात्यायनात् पाणिनेश्च प्राचीनमेनं भासकविं प्रतिपादयन्ति । ऐतिहासिकानामत्रापि नैकमत्यम् ।

एतस्य महाकवेर्भासस्य समयनिर्णयादिविषये श्रीमन्मित्रवर-साहित्यशास्त्राचार्य-एम् . ए. उपाधिधारि-**सीतारामजयरामजोशी**महोदयैर्निबन्ध एको महत्तमः परःशतपृष्ठात्मको गवेषणापूर्णः सोदाहरणो महता परिश्रमेण सम्पादितः । अयं च निबन्धो दुर्दैवादमुद्रितरूप एवाद्यापि वर्तते । यदि कदाचिदेतन्मुद्रणसौभाग्यं सम्पद्येत, परिचयस्तर्हि भूयान् भासविषये लभ्येत जिज्ञासुभिः । सागरायमाणोऽयं निबन्धस्तत्राऽवगाहनमापाततः कुर्वतोऽत्युच्चावचविचारवीचिषु नूनं पातयेत्, अन्तः प्रविष्टाः पुना रत्नरूपं किमपि ततोऽवगन्तुं प्रभवेयुः । इत्थमेतत् कवेर्भासस्य परिचयादिकं प्रदर्शितं किञ्चित् । बहुभिर्बहुधा विचारितो बहुवक्त-

व्योऽयं विषयः कथं नाम सङ्क्षेपान्निरूपयितुं शक्यते ? अत्र किल विषये पुरः सरन्त्यपि लेखनीयं विस्तरभिया पश्चादाकृष्यते । समधिकलेखनं पुनः प्रसङ्गाऽनुचितं मत्वा विषयोऽयमत्रैव परिसमाप्यते ।

एतावदित्थं प्रतिपाद्य ग्रन्थकारस्य विषये, साम्प्रतं ग्रन्थमेतं वर्णनविषयीकर्तुं किञ्चित्प्रस्तूयते । ग्रन्थेऽस्मिन्समालोच्यमाने, विलक्षण एवायं प्रतीयते रचनाविशेषः । कवेः कृतिरियं क्वचिदेकत्र भाषाविषये परं प्रौढिमानमारूढाऽन्यत्र बहुत्र च शैथिल्यं कलयन्ती मध्ये मध्ये व्याकरणसिद्धान्ताऽननुमतान् पदप्रयोगान् प्रदर्शयन्ती दर्शकानां मानसं भूयो विभ्रमोर्मिषु विप्लावयते । पद्यानि च कानिचित् क्वचित्सरसानि भावपूर्णानि सहृदयहृदयं प्रविशन्ति दृश्यन्ते । निष्पक्षं निरूप्यमाणे, गुणा अल्पा दोषाश्चाऽनल्पा इह प्रतीयेरन् विदुषाम् । तादृशीं प्रसिद्धिं प्राप्तस्य भासस्य लेखन्याः प्रसूतमेतादृशं ग्रन्थमेनमवलोक्य को नाम काव्यार्थभावनापरिपक्वबुद्धिर्न चित्रीयेत ? रचनागुणेन च 'भासकृतं नैतन्नाटक'मित्येवं कल्पिते,

'स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः'

इतीदृक्पूर्वैः प्रशंसितं तत्कुत्र गतम्, कुतो वाद्य तन्नोपलभ्यते ? 'तदेवेद'मिति तु सहृदयेभ्यो विवेचकेभ्यः कथमपि न रोचते ।

केचिन्महानुभावाः–'प्राचीनतमस्यैतस्य कवेः सत्तासमये पाणिनीयाऽनुशासनस्य नवोदयत्वेन पूर्णतया प्रचाराभावाद् ग्रन्थेऽस्मिन् स्वसमयाऽनुरूपानपाणिनीयान् पदप्रयोगान्प्रकल्पयन् कविरयमप्रबुद्धोऽव्युत्पन्नो वेति केषाञ्चित्कल्पनं त्वदूरदर्शितामात्र'मिति वदन्तो रामायणमहाभारतसजातीयान् प्रयोगान्कुर्वन्तं महाकविं **भासं वाल्मीकिव्यासदेश्यं** पश्यन्तोऽत्रत्याऽपशब्दप्रयोगविषयेष्वार्षप्रयोगकल्पनां कुर्वन्ति । तत्तु तेषां श्रद्धाजाड्यमिव प्रतिभाति । अस्य कवेः प्रभूतं प्रशंसितस्य प्राचीनतमस्याऽप्यृषिकल्पत्वकल्पना तु न चेतःसात्त्विकी ।

इह किल कल्पितः कविना नायको वत्सराजो नायिका च वासवदत्ता । प्रियाविरहजन्मा शोकः प्रियावाप्तिजन्मानं रतिं नायकस्य विभावादिसंयोगात्परिपुष्णातीति प्राधान्येन शृङ्गारो रसः करुणश्च तदङ्गत्वेन निबद्धः सुतरां चारुतामावहति । एष चात्र करुणशृङ्गारयोरङ्गाङ्गिभावः प्रायोऽन्यत्राऽदृष्टपूर्वो विचित्र एव कविना तदनुकूलकथावस्तुसङ्घटनेन प्रतिभाबलादुद्भावितः । नायकश्चात्र

वत्सराजो नाम राजा श्रृङ्गाराभिरुचिर्धीरललितः सचिवायत्तसिद्धिश्च। 'साधारणादपि राजावंशात्प्रसूतो वत्सराजः श्रीभगवतीप्रसादमहिम्ना विद्याधराणां बहुमतः सन्नेकातपत्रं भूतधात्र्याः प्रभुत्वं कलयन् व्यद्योतते'ति **लघुस्तवे**—

'जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निःशेषाऽवनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः।
यद् विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभव-
न्मातस्त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रसादोदयः॥'

इत्यनेन पद्येन दर्शितम्। एतस्य पाण्डववंशीयत्वं च **विष्णुपुराणादि**प्रतिपादितं ग्रन्थेऽस्मिन्सूचितं 'भारतानां कुले जात' इत्यमुना श्लोकेन। ईशवीयशतकारम्भतः प्राक् '४७४' वत्सरादारभ्य '४४६' वत्सरान् यावन्मगधदेशे, राज्यशासनं कुर्वतो दर्शकभूपतेर्भगिनी पद्मावती वत्सराजेन परिणीतेति पञ्चमशतकोत्तरार्धे वत्सराजस्य सत्ता **विजयानन्दत्रिपाठिकृतसञ्जीवनी**टीकायां निर्दिष्टा।

अत्र हि कविस्तदानां प्रसिद्धस्य वत्सराजस्य कथां वर्णितवान्। प्राचीनकाले कर्णाकर्णिकयाऽवगताः पूर्वपरम्पराप्राप्तास्तास्ताः कथा जानन्तो वृद्धाः परस्परं तत्प्रकाशनेन तासामितस्ततः प्रचारं कुर्वते स्म। इदञ्च 'प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्' इत्यनेन **मेघदूते कालिदासेन** सूचितम्। ततः कालक्रमेण **रामायणं महाभारतं बृहत्कथां** वोपजीव्य कथावस्तूनां परिचयरतत्र तत्र तैः क्रियते स्म। एवमेव कियति कालेऽतीते, पैशाच्यां लिप्यां निबद्धा **गुणाढ्यस्य बृहत्कथा क्षेमेन्द्रसोमदेवाभ्यां** संस्कृते सङ्कलिता। तौ च '**बृहत्कथामञ्जरी—कथासरित्सागर**' इति नाम्ना प्रसिद्धौ ग्रन्थौ मूलभूतावाश्रित्य साम्प्रतं कथावस्तु सङ्गृह्यते लोकैः। उदयनस्य कथा **बृहत्कथामञ्जर्यां कथासरित्सागरे** च सविस्तरं तिपादिता वर्तते। प्रायश्चैषा स्वप्नवासवदत्तीयं कथाभागमनुसरति। क्वचिदंशे क्रमभेदेन सह परस्परं विषयभेदोऽप्यत्र विभाव्यते।

एतन्नाटकीया कथा च '**कथासार**'नाम्ना प्रकृतनाटकभाषानुवादकैर्मित्रवरैः साहित्याचार्य—**होशिङ्गजगन्नाथशास्त्रिभिः** सन्दब्धा ग्रन्थोपक्रमे योजिता वर्तते। तत एवैतद्ग्रन्थप्रतिपाद्यो विषयोऽवगन्तुं शक्य इत्यतस्तद्वर्णनं न पुनरत्र प्रस्तूयते।

इत्थमत्र सकलं विचारणीयं विषयं परिसमाप्तिं नीत्वा किमप्यावश्यकमन्तिमं निवेद्य लेखोऽयमुपसंह्रियते। इदं तावत्कार्यं नूतनं टीकालेखनं नाम स्वीकृतपूर्वं

यथावकाशमनुतिष्ठंस्तदौपयिकीमान्तरां व्याकुलतामन्तराऽनुभवन्नद्य श्रीपरमेश्वरस्य कृपया निष्प्रत्यूहं कथमपि समाप्तिं नीतवानिति भारापनयात्सुतरां सुखी संवृत्तोऽहमिदानीम्। एतत्कार्यानुकूलपर्याप्तावकाशाऽनवाप्तिरेव मां कमप्यत्र सहायकं कर्तुं नितरामन्वरौत्सीत्। तदर्थं च प्रियसुहृदं **श्रीजगन्नाथशास्त्रिणं** साहाय्यविषये सहजसौहार्दादन्वरुणधम्। तदीयं तत्स्वीकरणं च ममोत्साहसम्पत्तिमेतत्कार्यौपयिकीं समवीवृधत्। एकैकटीकासम्पादनं ततो विभज्यावाभ्यां यथाबुद्धि कार्यमिदं सम्पादितम्, आवश्यकं परस्परेण साहाय्यं च स्वस्वकार्येषु कल्पितम्। 'इदंप्रथममेतत्कार्यं कथं सञ्जात'मित्यहं किमपि न वेद्मि। 'आपरितोषाद्विदुषा'मितीदृशी वर्तते मे स्थितिः। विलक्षणे ग्रन्थेऽस्मिन्नरुचिविशेषं वहद्भिः सर्वथाऽनिच्छद्भिरपि सविनयादरभक्तिभावमभ्यर्थितैरन्तेवासिजनसम्मुखीनसाधारणेतरसहजकरुणाप्रस्रवणैः साहित्यसारसर्वस्वायितैः श्रीमन्महामहोपाध्याय-गुरुवर**श्रीलक्ष्मणशास्त्रितैलङ्ग**पूज्यपादैः सौभाग्योदयेन मुद्रणात्प्राक् सदयदृष्टिपातप्रसादेन पवित्रीकृतोऽयं ग्रन्थस्तद्विषये च स्वीयवक्तव्यप्रकाशनानुग्रहाद्वाढमुपकृतमित्युपकारभारवहनाद् विनयावनम्रस्य दासजनस्य मूर्धा श्रीचरणयोः पुरस्तादत्यन्तमवनत एव। विनेयैः सम्पादितस्य वस्तुनः सादरमुपजीव्यचरणयोः समर्पणं प्रधानं तत्कर्तव्यमिति, यदुपज्ञो व्युत्पत्तिलेशः सञ्जातस्तेभ्य एव तत्कृतं निवेदनीयमिति च पर्यालोच्य तत्कृपाऽमृतवल्लीफलमिदमेतत्सम्पादकौ सुरसरस्वतीप्रसादसम्प्राप्तसारस्वतवैभव-साहित्याचार्य—श्रीमद्गुरुवर**श्रीभालचन्द्रशास्त्रिमानवल्लि**चरणयोः समार्पयताम्। अत्र किल भूमिकोचितविषयसूचनेन साहाय्यं वितन्वतां यथोचितविचारैश्च सम्भावयतां सहजसौहार्दशालिनां साहित्याचार्य-**श्रीबटुकनाथशर्म** एम्० ए० महोदयानामुपकाराणां सर्वथैवाऽधमर्णाः स्मः। दृष्टिदोषान्मुद्रणदोषाच्च सम्भावितानामशुद्धीनां शोधनं विदुषः प्रार्थयमानो 'विद्यार्थिनोऽनेन नूनमुपकृता भवेयु'रिति सम्भावयन् निर्विघ्नपरिसमाप्त्या परमेश्वरचरणारविन्दस्मरणपुरःसरं विरमाम्यमुष्माद्व्यापारादिति शम्।

---

काशी।
रथयात्रा, संवत् १९९३

**अनन्तरामशास्त्री वेतालः।**

॥ श्रीः ॥

## द्वितीयसंस्करणोचितं

# प्रासङ्गिकं किञ्चित् ।

परतरप्रमोदस्थानमिदमस्माकमिदानीं यदस्मदुपकल्पितव्याख्यासनाथं नाटकं स्वप्नवासवदत्तं नाम विद्यार्थिजनोपकारसाफल्यमधिगतं प्रथमं संस्करणमतीत्य द्वितीयेऽस्मिन् प्रवेशोपक्रमं कुरुते। यदर्थमेषोऽस्माकमारम्भ आसीत्, तदुद्देश्यमेतस्य विद्यार्थिवर्गोपयोगसाधनत्वं नाम श्रीमत्करुणाकूपारपरमेश्वरानुग्रहेण फलेग्रहितामधिगच्छति स्मेति विषयेऽस्मिन् शरणीकरणीयश्रीमत्सद्गुरुवरचरणारविन्दकरुणाकटाक्षकणिकैव नूनं कारणम् ।

प्रकाशितपूर्वाणि द्वित्राण्येतन्नाटकटीकापुस्तकानि विचारसाहाय्यकारीणि पुरस्कृत्य विचित्रतमैतद्ग्रन्थाभिप्रायप्रकाशनरूपटीकानिर्माणसाहसमस्मदीयमिदं तावत्प्राथमिकमेव। तत्र तत्र स्थलविशेषेषु दुरूहत्वमपनीय विनेयेषु दयमानैः सद्गुरुचरणैः समुचितविचारसारप्रदर्शनद्वारेण सुतरामनुगृहीतम्, तेन च निःशङ्कमत्रास्माभिः प्रवृत्तम् ।

अनन्तरञ्च कियतः कालात्केचिदन्येऽप्याहोपुरुषिकामुद्घोषयन्तः स्वीयं व्याख्यानपाण्डित्यताण्डवं दर्शयन्तो विषयेऽस्मिन्नवतीर्णा अभूवन्। एकं प्रवृत्तमवलोक्य परमसौहार्दभाजनमन्यं पुनस्तत्रैव सगर्वगौरवं पिष्टपेषणपूर्वं पदार्पणसाहसमपूर्वं कृतवन्तमुपलक्ष्य सञ्जातहासं मानसमस्मदीयमतुलं कौतूहलं गाहते ।

तैरेवाभिनवटीकाकारैर्भूतपूर्वव्याख्यानबलादात्मनो बुद्धिबलकौशलं दर्शयद्भिः स्वकीयटीकायां क्वचित्क्वचिदस्मदीयस्मरणं समीचीनमुपकल्प्य सहृदयहृदयोचितं परमसौहार्दं विशदं परिचायितमित्येतदत्युदारं चरितमिदानीं तेषामतिस्नेहं सानन्दमभिनन्दामः ।

संस्करणेऽत्र द्वितीये पुनरस्माभिः सावधानदानं सर्वेऽपि विषयाः साधु पर्यालोचिताः। चेतसो वृत्तिश्च तात्कालिकीमनुसृत्य तत्र तत्र परिवर्तनपरिवर्धनादिक-

मप्यत्र यथेच्छं विहितम् । स्वविचारानुरूपमत्र पुनः कुत्राप्यस्मदीयटीकान्तर्गतेषु विषयेष्वितरैः कल्पितानाक्षेपान्निःसारत्वेन समुपेक्षया स्वीकृत्य तत्सूचकान्प्राज्ञवरांस्तांस्तदर्थं सस्नेहमभिनन्द्य सविमर्शं तेभ्य एव तदीयाक्षेपाः साम्प्रतं ते प्रत्यर्प्यन्ते ।

विचारपुरःसरं क्वचन सावधानमप्युपन्यस्ते विषये किमपि मानुष्यकसुलभं स्खलितं नाम नातीवाऽसम्भवम् । तादृशं किमपि सङ्घटितमत्रासीत्प्रथमे संस्करणे । किन्तु तत्केनापि समालोचकवरेण नूतनटीकाकारेण नयनयोरात्मनः पन्थानमानेतुं न पारितं प्रत्युत चित्रं तस्यैव सर्वैरनुकरणं कृतम् । तादृशञ्च किञ्चिदनुचितमिव प्रतीयमानमिदानीं नयनयोः पदवीमुपनीय परिशोध्य च तत्सर्वं समीकर्तुं यथाप्रज्ञमत्र प्रयतितम् ।

समालोचनविधाने च सङ्ख्यावता नूतनव्याख्याकृतां क्वचन कानिचन चेष्टितानि दृष्टिगतानि कुर्वतः कस्य नाम सहृदयस्य हृदयं विस्मयेन विकस्वरं न स्यात् ? तदीयं पुनरालोचनमस्मदीयमनसे नारोचत । एकस्य किञ्चिच्चेष्टितमुद्वीक्ष्य तादृशमेवान्येनापि चेष्टनीयमित्येष नास्ति कोऽपि न्यायः । तन्नूनं क्षुद्रताप्रदर्शकमित्युपेक्षणीयपक्षे निक्षिप्य समालोचनयोग्योऽपि तादृग् विषयोऽत्र कुत्रापि नास्माभिः परामृष्टः । केवलं स्वीयेषु विषयेष्वेव सविशेषं दृष्टिक्षेपो विहितः । अर्थप्रतिपादनविधौ च साहित्यमार्मिकत्वं तेषां कुत्रापि कौतूहलमपूर्वमुत्थापयति बलादस्मन्मानसे 'साहित्यतत्त्ववेत्तारो विरला एव तादृशा' इत्येवं भावं दृढमुत्पादयति च ।

अस्मद्व्याख्यानप्रकाशनसमनन्तरमेव प्रकाशपदवीमुपयातं सुगृहीतनामधेयप्राज्ञवरोद्भावितं व्याख्याद्वयं तत्सकौतुकमत्यादरस्नेहपुरःसरं सर्वतः सम्यगालोच्य सञ्जातावसरं द्वितीयमेतत्संस्करणं प्रकाशयितुमुपक्रान्तम् । अत्र किलास्मन्मित्रवरैस्तैः स्वकीयव्याख्याप्रसङ्गेन समालोचितानि तानि तानीतराणि च स्थलानि कानिचिदुद्दिश्याऽवश्यविधीयमानविचारप्रसङ्गे समुपस्थिते 'द्वयोर्विवादे तृतीयः शरणीकरणीय' इति स्वीयाः केऽपि तत्समयानुरोधेन समुचितविचारप्रदर्शनरूपप्रयासस्वीकरणाय कतिवारमभ्यर्थिताः सुचिरात्तसौहार्दाः सुहृदः । प्रदर्शितचराऽनेकसमयोचितविचारसाहाय्यैरपि तैर्यादृशमत्रेदानीं सहृदयत्वमात्मनो दर्शितं तादृशं कदापि स्वप्नेऽपि नास्माभिर्विचिन्तितमासीदित्यलक्षितकारणविशेषभावाभिव्यञ्जकं तेषा-

मिदमौदार्यमत्यानन्देन कथं वाभिनन्दनीयमित्येतत् बुद्धेः पन्थानं कथमपि नारोहति। कार्यं तु निष्प्रत्यूहप्रतिबन्धं सिद्धिं गच्छत्येव श्रीमद्भगवत्याः करुणया। 'गच्छतां कोऽपि मार्गः स्फुरती'ति कमपि नूतनस्नेहशालिनं सहृदयं तत्तत्पर्यालोचनीयविषयेषु किञ्चिद्विचारसहकारिणं कृत्वा चरमसिद्धान्तसुधारसलब्धये श्रीमद्गुरुवरकलानिधिं कलयतां नो निष्कण्टक एषोऽवदातः पन्थाः।

सर्वेऽपि वयमत्र नाटके टीकां कर्तुमुद्यता वाराणसेयाः स्वं स्वं बुद्धिवैभवमालम्ब्य विद्यार्थिजनसमुदायप्रदर्शितमाफल्यं प्रयत्नं कृतवन्तः साम्प्रतमितीदन्तु सर्वेऽपि सङ्ख्यावन्तः स्वीकुर्युः। कविमानसभावार्थाविष्करणे च सर्वेषां भावुकानां स्वतन्त्रतया तत्र तत्र भिन्नभिन्नाः सर्वैः स्वाभिप्रायाः प्रदर्शिताः। निजाऽनभिमतेतरविषयाक्षेपकटाक्षादिप्रदर्शनं तु तत्तद्विषयवैदुष्याभिमानमूलकं पाण्डित्यकण्डूतिहेतुकं द्वेषासूयादिसूचकं वा प्रायः स्वारसिकं समभ्यस्तमेव लोके। क्षुण्णोऽयं मार्गः पूर्वैरद्ययावदनुस्रियतेऽवमरौचित्येन लोकैः स्वैरमित्येतन्न तथा दूषणास्पदमिदानीम्। आवश्यकतानुसारं तदेतदवश्यमाचरणीयं भवतीत्येष लौकिको न्यायः।

तदिदं पुस्तकमिदानीं यथोचितं संस्कृत्य मुद्रयित्वा प्रकाशितं तद्ग्राहकाणां पुरस्तादुपनीयते। समयानुसारमत्र संशोधने त्वरया विहिते क्वचन किञ्चन दृष्टिदोषादस्माकं प्रमादाद्वा सीसकाक्षरयोजकादीनां साधारणमशुद्धं मात्राक्षरविपर्यासादिरूपमत्रावशिष्टं भवेदिति भृशं सम्भाव्यते, तदिदं तद्विदा संशोधनीयं दर्शनीयमिदमखिलं व्याख्यानं विद्यार्थिभिः परीक्षायामुपयोगसाधनताञ्च नेतव्यो ग्रन्थोऽयमित्येतदन्तिममावेद्य परमानन्दसन्दोहकारणं करुणारसस्रोतसं परतरां चिन्मयीमचिन्तनीयमहिमानं मातरं भगवतीञ्चान्तः सञ्चिन्त्य साम्प्रतं विरम्यतेऽस्मात्प्रासङ्गिकाल्लेखादिति शम्।

काशी। गङ्गादशहरा, संवत् १९९७ — विदुषां विधेयः—
**अनन्तरामशास्त्री वेतालः।**

॥ श्रीः ॥

श्रीमत्परमेश्वरकरुणया प्रकाश्यमानमिदं **तृतीयं संस्करण**मवलोक्य पुस्तकस्यास्य भृशं विद्यार्थिवर्गोपयोगसाधनत्वञ्चालोच्य सफलप्रयत्नस्य परमं प्रमोदमुपगच्छत्यन्तरात्मा मे। अत्र किञ्चिन्न नूतनं सर्वं पूर्ववदेव। प्रश्नपत्राणि च कानिचिदन्ते सङ्गृहीतानीति व्यक्तव्यान्तराभावाद्विरमयामि लेखनीमिमाम्।

काशी। निर्जलैकादशी, सं. २००२। — **अनन्तरामशास्त्री वेतालः।**

॥ श्रीः ॥

बृहत्कथामञ्जरी–कथासरित्सागरान्तर्गतोऽयं वत्सराजकथाभागः सङ्गृह्यते। अत्र च तत्तद्वर्णनांशं विहाय प्रस्तुतप्रधानकथानुषक्तान्येव पद्यानि सङ्कलितानि। 'किमत्रोपादेयं किञ्चानुपादेय'मिति विचारसङ्कटे समुपस्थिते मयि च कार्यान्तरव्यग्रचेतसि, प्रथमपरिचयेऽपि प्रदर्शितप्रगाढसौहार्दसम्पत्प्रभावसम्भाविताऽसीमसरसभावोचितात्युदात्तभावैः साहित्याचार्यश्रीमधुसूदनमिश्रमहोदयैः स्वीयानर्घ्यविचारसारसंसूचनेन सुतरामनुगृहीतम्। महानुभावानाममीषामुपकारविशेषादस्मादानृण्यं प्राप्तुमिच्छताऽप्यकिञ्चनेन न किं तावत्तदुचितं पारितोषिकमर्पयितुं पार्यत इति केवलं गुणस्मरणपुरःसरं मनसाऽभिनन्दामि तेषामौदार्यमिदम्।

अनन्तरामशास्त्री वेतालः।

---

## श्रीक्षेमेन्द्रविरचितायां बृहत्कथामञ्जर्यां कथामुखनामा द्वितीयो लम्बकः।

कौशाम्बी शाम्भवीव श्रीरस्ति स्वस्तिमती पुरी ॥ ४ ॥
अर्जुनाभिजने जातो जनमेजयसम्भवः।
शतानीकोऽभवत्तत्र राजा राजेन्द्रशेखरः ॥ ६ ॥
बभूव तस्य राज्याब्धेः कर्णधारो महामतिः।
मन्त्री युगन्धरो नाम शक्रस्येव बृहस्पतिः ॥ १२ ॥
सेनानीः सुप्रतीपश्च विप्रः शास्त्रार्थवित्तथा।
स्वैरेच्छानर्मसचिवस्तथाऽभूद्वल्लभो विभोः ॥ १३ ॥
तस्य विष्णुमती नाम विष्णोःश्रीरिव वल्लभा।
बभूव विभ्रममही जैत्रमस्त्रं मनोभुवः ॥ १४ ॥
स मृगव्याप्रसङ्गेन कदाचिन्निर्गतो वनम्।
ददर्श तेजसां राशिं मुनिं शाण्डिल्यमाश्रमे ॥ १५ ॥
नामाभिजनमावेद्य तं प्रणम्य महीपतिः।
अवाप तस्मादुचितं पुत्रलाभवरं च सः ॥ १६ ॥
स राज्ञो वरदः श्रीमान्कौशाम्बीमेत्य सादरम्।
पुत्रेष्ट्या पुत्रकामस्य याजकोऽभून्महामुनिः ॥ १७ ॥

ततो मुनिप्रसादेन राजा दशरथोपमः ।
इक्ष्वा राममिव प्राप सहस्रानीकमात्मजम् ॥ १८ ॥
स यौवराज्ये तनयं विधाय विधिना नृपः ।
पीयूषबिम्बित इव प्रालेयकरणोऽभवत् ॥ २० ॥
महिष्या सह भूपाले सम्प्राप्ते कीर्तिशेषताम् ।
भेजे राज्यं शतानीकतनयो मन्त्रिणां गिरा ॥ २६ ॥
ततः कालेन तनयां क्ष्मापतेः कृतवर्मणः ।
तामाससाद दयितां सर्वस्वं पुष्पधन्वनः ॥ ३५ ॥
सा तस्माद्गर्भमाधाय भवानीवेन्दुशेखरात् ।
पाण्डिम्ना शशिलेखेव पीयूषक्षालिता बभौ ॥ ३७ ॥
अत्रान्तरे मन्त्रिवरः सेनानीश्च महीपतेः ।
द्विजो नर्मवयस्यश्च पुत्रान् प्राप कुलोचितान् ॥ ३८ ॥
सुतो युगन्धरस्यासीच्छ्रीमान् यौगन्धरायणः ।
रुमण्वान् सुप्रतीपस्य द्विजस्य च वसन्तकः ॥ ३९ ॥
ततस्तामामिषधिया सुपर्णकुलसम्भवः ।
जहार विकटः पक्षी मुग्धो दग्धविधेर्वशात् ॥ ४३ ॥
नीत्वा विहायसा दूरं स तामचलसन्निभः ।
तत्याज मोहविवशामुदयाचलकन्दरे ॥ ४४ ॥
लब्धसंज्ञा शनैः कम्पविलोलतनुवल्लरी ।
कीर्णोत्पला इव दिशश्चकार चकितेक्षणैः ॥ ४५ ॥
ततो यदृच्छया यातस्तां विलोक्य तथा स्थिताम् ।
निनाय करुणासिन्धुर्मुनिपुत्रस्तपोवनम् ॥ ५० ॥
सुतेवाश्वासिता तत्र कृपया जमदग्निना ।
असूत तनयं काले सेनान्यमिव पार्वती ॥ ५१ ॥
तस्याकाशभवा वाणी चकारोदयनाभिधाम् ॥ ५२ ॥
आश्रमे स मुनीन्द्रेण कृतचूडादिकस्ततः ।
ववृधे बालकशशी सह मातुर्मनोरथैः ॥ ५३ ॥
सोऽपश्यन्मृगयासक्तो व्याधबद्धं भुजङ्गमम् ॥ ५४ ॥

दीनमालोक्य भुजगं शबराय धनार्थिने ।
अमोचयत्स्वजननीदत्तं दत्त्वा स्वकङ्कणम् ॥ ५५ ॥
स सर्पो मोचितस्तेन नागो भूत्वा कृताञ्जलिः।
सख्यं विधाय पातालं निनाय तमुदारधीः ॥ ५६ ॥
स किन्नराभिधो नागो धृतराष्ट्रसुतः प्रियम् ॥ ५७ ॥
भगिनीं ललिताभिख्यां ददावुदयनाय सः ॥ ५८ ॥
ताम्बूलीस्रजमम्लानां वीणां घोषवतीमपि ।
अवाप्य राजतनयः फणीन्द्रात्स्वाश्रयं ययौ ॥ ६० ॥
अत्रान्तरे स शबरः कौशाम्ब्यां वणिजं ययौ ।
सहस्रानीकनामाङ्कमणिकङ्कणविक्रयी ॥ ६२ ॥
आदाय रत्नकटकं स विभीतो महीभुजे ।
निवेद्य शबरोपेतः प्रणम्य स ययौ वणिक् ॥ ६३ ॥
श्रुत्वा वलयसंम्प्राप्तिकथां कृत्वा पुरोगमम् ॥ ६५ ॥
शबरं तां दिशं हृष्टः प्रतस्थे सह मन्त्रिभिः ।
जामदग्न्याश्रमं प्राप निर्वैरहरिकुञ्जरम् ॥ १३६ ॥
मुनिना पूजितस्तत्र दयितां विरहार्दिताम् ।
लेभे हर्षविशोकाढ्यस्तनयं चाऽतनुद्युतिः ॥ १४० ॥
प्रियासहायः स्वपुरीं प्रतस्थे मन्त्रिभिर्वृतः ॥ १४२ ॥
ततः प्रविश्य कौशाम्बीं तनयाय ददौ नृपः ।
पुत्रान् युगन्धरादीनां पौरराज्यश्रिया सह ॥ १४३ ॥
यौगन्धरायणो मन्त्री रुमण्वान् वाहिनीपतिः ।
वसन्तको नर्मसुहृद्राजसूनोरभूत्ततः ॥ १४४ ॥

इति श्रीक्षेमेन्द्रविरचितायां बृहत्कथामञ्जर्यां कथामुखलम्बके
सहस्रानीककथा नाम प्रथमो गुच्छः ।

---

## अथ द्वितीयो गुच्छः ।

कुलोचितपदं याते पार्थवंश्ये महीपतौ ।
प्रियासहायस्तत्सूनुश्चक्रे शास्त्रोदितां क्रियाम्॥ १ ॥
यौगन्धरायणन्यस्तराज्यचिन्तापरोऽनयत् । •
कालं वीणाविनोदेन स मृगव्यामसेवत ॥ ३ ॥
अत्रान्तरे श्लथारम्भं तं ज्ञात्वोज्जयिनीपतिः ।
चक्रे चण्डमहासेनस्तज्जयाय ततं मनः ॥ ४ ॥
कन्या वासवदत्तेयं तद्योग्यैव सुता मम ।
निसर्गशत्रुर्नार्थ्यो मे मानी स च न याचते ॥ ५ ॥
बध्नाति कुञ्जरान्नित्यं वीणानादहृतान् वने ।
ग्राह्यः स क्रूरनागेन विधायेति धियं पुरः ॥ ६ ॥
दिदेश दूतं कृतकप्रणयोपायनैः सह ।
वत्सेश्वराय सन्देशमित्यदाच्च दृढाशयः ॥ १० ॥
'पुत्री मे कुलसर्वस्वमियं गान्धर्ववेदिनः ।
वीणायां श्रुतितत्त्वज्ञ ! शिष्यतां तव वाञ्छति॥ १२ ॥
तदेह्युज्जयिनीं देव ! प्रणयाद् दुहितुर्मम' ॥ १३ ॥
इत्युक्त्वा प्रेषितो दूतः कौशाम्बीं त्वरितो ययौ ।
तत्रोदयनमासाद्य यथादिष्टं न्यवेदयत् ॥ १४ ॥
'वीणां वासवदत्तासौ ज्ञास्यत्यभ्येत्य मत्पुरीम् ।
शिष्यो गुरुगृहं याति न हि शिष्यगृहं गुरुः ॥ १५ ॥
इति प्रतीपसन्देशं प्राप्य दूते गते नृपः ।
यौगन्धरायणो मन्त्री चुकोपाऽवन्तिभूभुजे ॥ १६ ॥
अत्रान्तरे प्रतिवचो दूरादाकर्ण्य निःस्पृहम् ।
ध्यायंश्चण्डमहासेनः किमपि व्याकुलोऽभवत् ॥ ३१ ॥
यौधैरन्तःकृतावासं चण्डो यन्त्रमहागजम् ।
विन्ध्याटव्यां ससर्जाशु सशैलमिव जङ्गमम् ॥ ३२ ॥
तं विलासाऽलसगतं विलोलश्रवणाननम् ।
व्याधैः सुरगजाकारं विवेदोदयनो नृपः ॥ ३३ ॥

गजेन्द्रबन्धकुशलो विवेशैको महद्वनम् ॥ ३४ ॥
कूटकुञ्जरमालोक्य वीणामधुरगीतिभिः ।
स जिघृक्षुर्मुधा तस्थौ सेवाभिरिव दुर्जनम् ॥ ३६ ॥
तस्मिन्घोषवतीव्यग्रे योधाः कुञ्जरनिर्गताः ।
अभ्याययुः सुसंरब्धाः सहसा तं जिघृक्षवः ॥ ४१ ॥
स तानशङ्कितो दृष्ट्वा धैर्यनिष्कम्पमानसः ।
मण्डलोत्तालचरणो जघान सुभटान् रणे ॥ ४२ ॥
हतशेषैः सहाभ्येत्य महाकालवरोर्जितः ।
एको वीरवरः पश्चाज्जग्राह च्छद्मना नृपम् ॥ ४३ ॥
वत्सेश्वरं समासाद्य स विवेश निजां पुरीम् ॥ ४४ ॥
ततः प्रणम्य वत्सेशं सह पौरैर्व्यजिज्ञपत् ।
'मान्योऽसि मम राजेन्द्र ! नहि मे किल्बिषं त्वयि'॥ ४६ ॥
'इत्युक्त्वा तनयामस्मै न्यवेदयदमन्दधीः ।
वीणागेयकलाज्ञाने शिष्येयं भवता'मिति ॥ ४७ ॥
तां ददर्श ततो राजा नीलनीरजलोचनाम्॥ ४८ ॥
विलोक्य राजतनयां स कम्पतरलोऽभवत् ॥ ५२ ॥
राजपुत्री तमालोक्य लज्जानतमुखी बभौ ॥ ५३ ॥
प्रेमप्रणयशालिन्या सेव्यमानस्तया नृपः ।
राज्यस्थितिं विसस्मार सुधयेवाऽमरीकृतः ॥ ५५ ॥
संमन्त्र्य सेनापतिना सह पौरैश्च दुःखितः ॥ ५८ ॥
यौगन्धरायणो धीमान्निर्ययौ योगकोविदः ॥ ५६ ॥
दिनैर्दशभिरासाद्य योगेनोज्जयिनीं ततः ॥ ६४ ॥
तत्र योगेश्वराख्येन मित्रतां ब्रह्मरक्षसा ।
प्राप्य रूपपरावृत्तिं योगं लेभे महामतिः ॥ ६६ ॥
क्षणाद् बभूव खल्वाटः पञ्चचूडो महाहनुः ।
लम्बोदरस्तनुग्रीवः ककुदी जरसार्दितः ॥ ६७ ॥
वसन्तः सोऽपि तेनैव नीतः क्षिप्रं विरूपताम् ।
बभूव विकटाकारो हस्त्यायतनमात्मनः ॥ ६८ ॥

यौगन्धरायणः प्राप्य राज्यमार्गं स्खलद्गतिः ।
गायन्हसन्पठन्धावन्नृत्यञ्जनमहासयन् (त्)॥ ६९ ॥
कन्यकान्तःपुरोपान्ते नितान्तोन्मत्तकोऽभवत् ॥ ७० ॥
कौतुकात्तत्र नारीभिर्नीतो गान्धर्वशालिकाम् ।
कन्यागुरुं ददर्शाथ नृपं पुनरिवार्जुनम् ॥ ७१ ॥
रहो युक्तं समाभाष्य योगेनाऽन्तर्हितोऽभवत् ॥ ७२ ॥
वत्सेश्वरोऽपि सम्प्राप्य योगं यौगन्धरायणात् ।
ददर्श मन्त्रसङ्केतविपरीतं वसन्तकम् ॥ ७३ ॥
अथ राजानमभ्येत्य स्वैरं यौगन्धरायणः ।
विमुक्त्युपायं सम्मन्त्र्य योगं दत्त्वा ययौ पुनः॥ १३३ ॥
वसन्तकेन सहितः सार्धं वासवदत्तया ।
तत्सख्या प्रेमविश्वासभुवा काञ्चनमालया ॥ १३६ ॥
निशि सर्वायुधोपेतो हत्वा नगररक्षिणः ।
ययौ करेणुकावेगधूतहारतरङ्गितः ॥ १३७ ॥
नडागिरिं समारुह्य पालकः कुपितोऽथ तम् ।
पृष्ठतोऽभिससारैकस्तज्ज्ञात्वाऽवन्तिपोऽब्रवीत्॥ १३९ ॥
'कोपनः पालकः शूरो मान्यो वत्सेश्वरश्च नः।
गच्छ गोपाल तद्युद्धं निवारय जवा'दिति ॥ १४० ॥
पितुर्नियोगादारुह्य सुग्रीवाख्यं तुरङ्गमम् ।
गोपालः प्रययौ तूर्णं ततो भ्रातृनिवर्तने ॥ १४१ ॥
अत्रान्तरे समभ्येत्य गोपालो जवनैर्हयैः ।
निनाय स्वपुरीमेव पालकं पितुराज्ञया ॥ १५६ ॥
अन्येद्युरथ मध्याह्ने प्रचण्डकिरणे रवौ ॥ १५८ ॥
ततस्तडागमासाद्य पीत्वा भद्रवतीजलम् ।
विषदूषितमाकण्ठमवतीर्य तृषाऽपतत् ॥ १५९ ॥
यौगन्धरायणेनाथ निजवेशवता नृपः ।
ननन्द सङ्गतस्तत्र समं वासवदत्तया ॥ १६३ ॥
अत्राभ्येति समादाय रत्नाश्ववरकुञ्जरान् ।

गोपालकस्त्वद्विवाहे विसृष्टोऽवन्तिभूभुजा' ॥ १६४ ॥
इति पान्थवणिग्वाक्यं ज्ञात्वा राजा प्रियासखः ।
विसृज्य दूतान् स्वपुरीं स्वसैन्याय व्यलम्बत॥ १६५ ॥
अत्रान्तरे प्रतीहारो महासेनमहीपतेः ।
वत्सेश्वरं समभ्येत्य समासीनं व्यजिज्ञपत् ॥ २४८ ॥
'देव ! चण्डमहासेनसमादिष्टः समेष्यति ।
गोपालकस्त्वद्विवाहयोग्यरत्नाश्वसम्पदा' ॥ २४६ ॥
श्रुत्वेति हृष्टः सेनानीः सज्जीकृतबलाऽम्बुधिः।
राजा विवेश कौशाम्बीं कौतुकाकुलतां गताम्॥ २५० ॥
अथ गोपालके प्राप्ते प्रवृत्ते च महोत्सवे ।
विवाहवसुधां राजा देव्या सह समाविशत् ॥ २५१ ॥
तयोर्बभौ विवाहश्रीः कुसुमायुधजीविनी ॥ २५२ ॥
वत्सेश्वरं समामन्त्र्य गोपाले शासनात्पितुः ।
प्रयाते स्वपुरीं राजा विजहार प्रियासखः ॥ २६६ ॥

इति क्षेमेन्द्रविरचितायां बृहत्कथामञ्जर्यां कथामुखनामा
द्वितीयो लम्बकः समाप्तः ।

---

प्राप्तिस्थानम्—

चौखम्बा संस्कृत पुस्तकालय,

बनारस सिटी ।

महाकविश्रीसोमदेवविरचितः कथासरित्सागरः ।

# अथ लावणको नाम तृतीयो लम्बकः ।

## प्रथमस्तरङ्गः ।

एवं स राजा वत्सेशः क्रमेण सुतरामभूत् ।
प्राप्तवासवदत्तस्तत्सुखासक्तैकमानसः ॥ ३ ॥
यौगन्धरायणश्चास्य महामन्त्री दिवानिशम् ।
सेनापती रुमण्वांश्च राज्यभारमुदूहतुः ॥ ४ ॥
स कदाचिच्च चिन्तावानानीय रजनौ गृहम् ।
निजगाद रुमण्वन्तं मन्त्री यौगन्धरायणः ॥ ५ ॥
'पाण्डवाऽन्वयजातोऽयं वत्सेशोऽस्य च मेदिनी ।
कुलक्रमागता कृत्स्ना पुरं च गजसाह्वयम् ॥ ६ ॥
तत्सर्वमजिगीषेण त्यक्तमेतेन भूभृता ।
इहैव चास्य सञ्जातं राज्यमेकत्र मण्डले ॥ ७ ॥
स्त्रीमद्यमृगयासक्तो निश्चिन्तो ह्येष तिष्ठति ।
अस्मासु राज्यचिन्ता च सर्वाऽनेन समर्पिता॥ ८ ॥
तदस्माभिः स्वबुद्ध्यैव तथा कार्यं यथैष तत् ।
समग्रपृथिवीराज्यं प्राप्नोत्येव क्रमागतम् ॥ ६ ॥
एवं कृते हि भक्तिश्च मन्त्रिता च कृता भवेत् ॥ १० ॥
परिपन्थी च तत्रैकः प्रद्योतो मगधेश्वर. ।
पार्ष्णिग्राहः स हि सदा पश्चात्कोपं करोति नः ॥ १६ ॥
तत्तस्य कन्यकारत्नमस्ति पद्मावतीति यत् ।
तदस्य वत्सराजस्य कृते याचामहे वयम् ॥ २० ॥
छन्नां वासवदत्तां च स्थापित्वा स्वबुद्धितः ।
दत्वाग्निं वासके ब्रूमो देवी दग्धेति सर्वतः ॥ २१ ॥
नान्यथा तां सुतां राज्ञे ददाति मगधाधिपः ।
एतदर्थं स हि मया प्रार्थितः पूर्वमुक्तवान् ॥ २२ ॥
नाहं वत्सेश्वरायैतां दास्याम्यात्माधिकां सुताम् ।
तस्य वासवदत्तायां स्नेहो हि सुमहानिति ॥ २३ ॥
सत्यां देव्यां च वत्सेशो नैवान्यां परिणेष्यति ।
देवी दग्धेति जातायां ख्यातौ सर्वं तु सेत्स्यति॥ २४ ॥

पद्मावत्यां च लब्धायां सम्बन्धी मगधाधिपः ।
पश्चात्कोपं न कुरुते सहायत्वं च गच्छति ॥ २५ ॥

ततः पूर्वां दिशं जेतुं गच्छामोऽन्याश्च तत्क्रमात्।
इत्थं वत्सेश्वरस्यैतां साधयामोऽखिलां भुवम्॥ २६ ॥
बहुदोषो हि विरहो राज्ञो वासवदत्तया' ।
एवं रुमण्वतोक्तः सन्नाह यौगन्धरायणः, ॥ ५५ ॥

'नान्यथोद्योगसिद्धिः स्यादनुद्योगे च निश्चितम्।
राजनि व्यसनिन्येतन्नश्येदपि यथास्थितम् ॥ ५६ ॥
अथ देवीपितुश्चण्डमहासेनाद्विशङ्कसे ।
स सपुत्रश्च देवी च वचः कुरुत एव मे ॥ ६० ॥

देवीदाहप्रवादेन कार्यं धैर्येण कुर्महे' ॥ १०३ ॥
इत्येतन्निश्चितमतेः श्रुत्वा यौगन्धरायणात् ।
रुमण्वानब्रवीदेवं 'तर्हि यद्येष निश्चयः ॥ १०४ ॥
तद्गोपालकमानीय देव्या भ्रातरमादृतम् ।
संमन्त्र्य च समं तेन सम्यक् सर्वं विधीयताम्'॥ १०५ ॥
एवमस्त्विति वक्ति स्म ततो यौगन्धरायणः ।
तत्प्रत्ययाद्रुमण्वांश्च चक्रे कर्तव्यनिश्चयम् ॥ १०६ ॥
अन्येद्युर्मन्त्रिमुख्यौ तौ दूतं व्यसृजतां निजम् ।
गोपालकं तमानेतुमुत्कण्ठाव्यपदेशतः ॥ १०७ ॥

कार्यहेतोर्गतः पूर्वं तद्दूतवचनाच्च सः ।
आगाद्गोपालकस्तत्र स्वयं मूर्त इवोत्सवः ॥ १०८ ॥
आगतं तदहश्चैनं स्वैरं यौगन्धरायणः ।
निनाय सरुमण्वत्कं गृहं गोपालकं निशि ॥ १०९ ॥
तत्र चास्मै तदुत्साहं शशंस स्वचिकीर्षितम् ।
यत्पूर्वं मन्त्रितं तेन सर्वं सह रुमण्वता ॥ ११० ॥
स च राजहितैषी सन् दुःखावहमपि स्वसुः ।
गोपालकोऽनुमेने तत्कर्तव्यं हि सतां वचः ॥ १११ ॥
'सर्वमेतत्सुविहितं देवीं दग्धामवेत्य तु ।

प्राणांस्त्यजन्कथं रक्ष्यो वत्सेश इति चिन्त्यताम्॥ ११२ ॥
सदुपायादिसामग्रीसम्भवे किल सत्यपि ।
मुख्यमङ्गं हि मन्त्रस्य विनिपातप्रतिक्रिया' ॥ ११३ ॥
इति भूयोऽपि तत्कालमुक्ते तत्र रुमण्वता ।
उवाचाऽऽलोचिताशेषकार्यो यौगन्धरायणः ॥ ११४ ॥
'नास्त्यत्र चिन्ता यद्राजपुत्री गोपालकस्य सा।
कनीयसी स्वसा देवी प्राणेभ्योऽप्यधिका प्रिया॥ ११५ ॥
एतस्य चाल्पमालोक्य शोकं वत्सेश्वरस्तदा।
जीवेत्कदाचिद्देवीति मत्वा धैर्यमवाप्स्यति ॥ ११६ ॥
अपि चोत्तमसत्त्वोऽयं शीघ्रं च परिणीयते ।
पद्मावती ततो देवी दर्श्यते चाऽचिरा'दिति॥ ११७ ॥
एवमेतद्विनिश्चित्य ततो यौगन्धरायणः ।
गोपालको रुमण्वांश्च ततो मन्त्रमिति व्यधुः॥ ११८ ॥
'युक्तं लावाणकं यामः सह देव्या नृपेण च ।
पर्यन्तो मगधासन्नवर्ती हि विषयोऽस्ति सः॥ ११९ ॥
सुभगाऽऽखेटभूमित्वाद् राज्ञश्चाऽसन्निधानकृत्।
तत्रान्तःपुरमादीप्य क्रियते यद्धि चिन्तितम् ॥ १२० ॥
देवी च स्थाप्यते नीत्वा युक्त्या पद्मावतीगृहे।
छन्नस्थिताया येनास्याः सैव स्याच्छीलसाक्षिणी॥१२१॥
एवं रात्रौ मिथः कृत्वा मन्त्रं सर्वेऽपरेऽहनि ।
यौगन्धरायणाद्यास्ते प्राविशन् राजमन्दिरम् ॥ १२२ ॥
तथैवमथ विज्ञप्तो वत्सराजो रुमण्वता ।
'देव! लावाणकेऽस्माकं गतानां वर्तते शिवम् ॥ १२३ ॥
स चातिरम्यो विषयस्तत्र चाखेटभूमयः ।
शोभनाः सन्ति ते राजन्नडघासाश्च सुग्रहाः ॥ १२४ ॥
बाधते तं च नैकट्यात्सर्वं स मगधेश्वरः ।
तत्तत्र रक्षाहेतोश्च विनोदाय च गम्यताम्'॥ १२५ ॥
एतच्छ्रुत्वा स वत्सेशः समं वासवदत्तया ।
क्रीडैकलालसश्चक्रे गन्तुं लावणके मतिम् ॥ १२६ ॥

## अथ द्वितीयस्तरङ्गः ।

ततः पूर्वोक्तया युक्त्या वत्सराजं सवल्लभम् ।
यौगन्धरायणाद्यास्ते निन्युर्लावाणकं प्रति ॥ १ ॥
वत्सेश्वरोऽपि निवसंस्तस्मिन्देशे दवीयसीम् ।
आखेटकार्थमटवीमटति स्म दिने दिने ॥ ५ ॥
एकस्मिन्दिवसे तस्मिन् राजन्याखेटकं गते ।
कर्तव्यसंविदं कृत्वा गोपालकसमन्वितः ॥ ६ ॥
यौगन्धरायणो धीमान् सरुमण्वद्वसन्तकः ।
देव्या वासवदत्ताया विजने निकटं ययौ ॥ ७ ॥
तत्र तां राजकार्येऽत्र साहाय्ये तत्तदुक्तिभिः ।
प्रह्वामभ्यर्थयामास भ्रात्रा पूर्वं प्रबोधिताम् ॥ ८ ॥
साऽनुमेने च विरहक्लेशदायि तदात्मनः ।
किं नाम न सहन्ते हि भर्तृभक्ताः कुलाङ्गनाः ॥ ६ ॥
ततस्तां ब्राह्मणीरूपां देवीं यौगन्धरायणः ।
स चकार कृती दत्त्वा योगं रूपविवर्तनम् ॥ १० ॥
वसन्तकं च कृतवान् काणं बटुकरूपिणम् ।
आत्मना च तथैवाभूत् स्थविरब्राह्मणाकृतिः ॥ ११ ॥
तथारूपां गृहीत्वाथ ता देवीं स महामतिः ।
वसन्तकसखः स्वैरं प्रतस्थे मगधान्प्रति ॥ १२ ॥
तथा वासवदत्ता सा स्वगृहान्निर्गता सती ।
आगाच्चित्तेन भर्तारं पन्थानं वपुषा पुनः ॥ १३ ॥
तन्मदिरमथादीप्य दहनेन रुमण्वता ।
'हा! हा! वसन्तकयुता देवी दग्धे'त्यघोष्यत ॥ १४ ॥
यौगन्धरायणः सोऽथ सह वासवदत्तया ।
वसन्तकेन च प्राप मगधाधिपतेः पुरम् ॥ १६ ॥
तत्रोद्यानगतां दृष्ट्वा समं ताभ्यामुपाययौ ।
पद्मावतीं राजसुतां वार्यमाणोऽपि रक्षिभिः ॥ १७ ॥
पद्मावत्याश्च दृष्ट्वैव ब्राह्मणीरूपधारिणीम् ।

देवीं वासवदत्तां तां दृशोः प्रीतिरजायत ॥ १८ ॥
सा रक्षिणो निषिध्यैव ततो यौगन्धरायणम् ।
आनाययद् राजकन्या ब्राह्मणाकृतिमन्तिकम् ॥ १६ ॥
पप्रच्छ च 'महाब्रह्मन् ! का ते बाला भवत्यसौ ।
किमर्थमागतोऽसी'ति सोऽपि तां प्रत्यभाषत ॥ २० ॥
'इयमावन्तिका नाम राजपुत्रि ! सुता मम ।
अस्याश्च भर्ता व्यसनी त्यक्त्वेमां कुत्रचिद्गतः ॥ २१ ॥
तदेतां स्थापयाम्यद्य तव हस्ते यशस्विनि ! ।
यावत्तमानयाम्यस्या गत्वाऽन्विष्याचिरात्पतिम् ॥ २२ ॥
भ्राता काणबटुश्चायमिहैवास्याः समीपगः ।
तिष्ठत्येकाकिनी भावदुःखं येन न यात्यसौ' ॥ २३ ॥
इत्युक्त्वा राजतनयामङ्गीकृतवचास्तया ।
तामामन्त्र्य स सन्मन्त्री द्रुतं लावाणकं ययौ ॥ २४ ॥
ततो वासवदत्तां तां स्थितामावन्तिकाख्यया ।
वसन्तकं चानुगतं तं काणबटुरूपिणम् ॥ २५ ॥
सहादाय कृतोदारसत्कारा स्नेहशालिनी ।
पद्मावती स्वभवनं विवेश बहुकौतुकम् ॥ २६ ॥
तामुत्तमां विनिश्चित्य महार्हैरात्मनः समैः ।
पद्मावती यथाकाममुपचारैरुपाचरत् ॥ २६ ॥
अथ वासवदत्ताऽस्याश्चक्रे देव्याः प्रसङ्गतः ।
अम्लानमालातिलकौ वत्सेशात्पूर्वशिक्षितौ ॥ ३१ ॥
तद्भूषितां च दृष्ट्वा तां माता पद्मावतीं रहः ।
पप्रच्छ 'मालातिलकौ केनेमौ निर्मिता'विति ॥ ३२ ॥
ऊचे पद्मावती चैना'मत्र मन्मन्दिरे स्थिता ।
काचिदावन्तिका नाम तया कृतमिदं मम' ॥ ३३ ॥
अत्रान्तरेऽतिदूरासु भ्रान्त्वाऽऽखेटकभूमिषु ।
वत्सराजश्चिरादागात्सायं लावाणकं पुनः ॥ ४७ ॥
भस्मीकृतमपश्यच्च तत्रान्तःपुरमग्निना ।

देवीं दग्धां च शुश्राव मन्त्रिभ्यः सवसन्तकाम् ॥ ४८ ॥
श्रुत्वैव चाऽपतद् भूमौ मोहेन हृतचेतनः ।
तद्दुःखानुभवक्लेशमपाकर्तुमिवेच्छता ॥ ४६ ॥
क्षणाच्च लब्धसंज्ञः सञ्जज्वाल हृदये शुचा ।
आविष्ट इव तत्रस्थदेवीदाहैषिणाग्निना ॥ ५० ॥
विलपन्नथ दुःखार्तो देहत्यागैकसम्मुखः ।
क्षणान्तरे स नृपतिः संस्मृत्यैतदचिन्तयत् ॥ ५१ ॥
गोपालकस्य चैतस्य शोकः स्वल्प इवेक्ष्यते ॥ ५३ ॥
यौगन्धरायणादीनां न चैषामतिदुःखिता ।
दृश्यते तेन जाने सा देवी जीवेत्कथञ्चन ॥ ५४ ॥
इयं किमपि नीतिस्तु प्रत्युक्ता मन्त्रिभिर्भवेत् ।
अतो मम भवेज्जातु तया देव्या समागमः ॥ ५५ ॥
निदधे हृदये धैर्यं बोध्यमानश्च मन्त्रिभिः ॥ ५६ ॥
एवं गते स्ववृत्तान्ते लावाणकगतैस्तदा ।
गत्वा मगधराजाय चारैः सर्वं निवेदितम् ॥ ५८ ॥
स तद् बुद्ध्वैव कालज्ञो वत्सराजाय तां सुताम् ।
दातुं पद्मावतीमैच्छत्पूर्वं तन्मन्त्रिमार्गिताम् ॥ ५६ ॥
ततो दूतमुखेनैनमर्थं वत्सेश्वराय सा ।
यौगन्धरायणायाऽपि संदिदेश यथेप्सितम् ॥ ६० ॥
यौगन्धरायणोक्त्या च वत्सेशोऽङ्गीचकार तत् ।
प्रच्छादितैतदर्थं स्याद्देवी जात्विति चिन्तयन् ॥ ६१ ॥
ततो लग्नं विनिश्चित्य तूर्णं यौगन्धरायणः ।
तस्मै मगधराजाय प्रतिदूतं व्यसर्जयत् ॥ ६२ ॥
'त्वदिच्छाङ्गीकृतास्माभिस्तदितः सप्तमे दिने ।
पद्मावतीविवाहाय वत्सेशोऽत्रागमिष्यति ॥ ६३ ॥
शीघ्रं वासवदत्तां च येनासौ विस्मरिष्यति' ।
इति चास्मै महामन्त्री सन्दिदेश यथेप्सितम् ॥ ६४ ॥
प्रतिदूतः स गत्वा च यथासन्दिष्टमभ्यधात् ।

ततो मगधराजाय स चाप्यभिननन्द तत् ॥ ६५ ॥
ततः स दुहितृस्नेहनिजेच्छाविभवोचितम् ।
विवाहोत्सवसम्भारं चकार मगधेश्वरः ॥ ६६ ॥
सा चाभीष्टवरश्रुत्या मुदं पद्मावती ययौ ।
प्राप वासवदत्ता च तद्वार्ताकर्णनाच्छुचम् ॥ ६७ ॥
इत्थं मित्रीकृतः शत्रुर्नच भर्तान्यथा त्वयि ।
वसन्तकोक्तिरित्यस्याः सखीव विदधे धृतिम् ॥ ६८ ॥
अथासन्नविवाहायाः पद्मावत्या मनस्विनी ।
अम्लानमालातिलकौ दिव्यौ भूयश्चकार सा ॥ ७० ॥
ततो वत्सेश्वरस्तत्र सम्प्राप्ते सप्तमेऽहनि ।
ससैन्यो मन्त्रिभिः साकं परिणेतुं किलाययौ ॥ ७१ ॥
प्रविश्य मगधेशस्य वत्सेशोऽप्यथ मन्दिरम् ।
सनाथं पतिवत्नीभिः कौतुकागारमाययौ ॥ ७६ ।
तत्र पद्मावतीमन्तर्ददर्श कृतकौतुकाम् ॥ ७७ ॥
तस्याश्च मालातिलकौ दिव्यावालोक्य तौ निजौ ।
'एतौ कुतोऽस्या' इत्येवं विममर्श स भूपतिः ॥ ७८ ॥
ततः स वेदीमारुह्य तस्या जग्राह यत्करम् ।
तदेवारम्भतां प्राप तस्य पृथ्व्याः करग्रहे ॥ ७६ ॥
मुमोच स कृतोद्वाहः कराद्वत्सेश्वरो वधूम् ।
न तु वासवदत्तां तां तत्याज हृदयात्क्षणम् ॥ ८१ ॥
साक्षीकृत्य च तत्कालमग्निं यौगन्धरायणः ।
अद्रोहप्रत्ययं राज्ञो मगधेशमकारयत् ॥ ८४ ॥
अथोच्चचाल वत्सेशो भुक्तपीतपरिच्छदः ।
मन्त्रिभिः सममादाय वधूं पद्मावतीं ततः ॥ ९० ॥
पद्मावत्या विसृष्टं च सुखमारुह्य वाहनम् ।
तथैव च समादिष्टैस्तन्महत्तरकैः सह ॥ ९१ ॥
आगाद्वासवदत्तापि गुप्तं सैन्यस्य पृष्ठतः ।
कृतरूपविवर्तं तं पुरस्कृत्य वसन्तकम् ॥ ९२ ॥

क्रमाल्लावाणकं प्राप्य वत्सेशो वसतिं निजाम् ।
प्रविवेश समं वध्वा देवीचित्तं तु केवलः ॥ ९३ ॥
एत्य वासवदत्तापि सा गोपालकमन्दिरम् ।
विवेशाथ निशीथे च परिस्थाप्य महत्तरान् ॥ ९४ ॥
तत्र गोपालकं दृष्ट्वा भ्रातरं दर्शितादरम् ।
कण्ठे जग्राह रुदती बाष्पव्याकुललोचनम् ॥ ९५ ॥
तत्क्षणे स्थितसंविच्च तत्र यौगन्धरायणः ।
आययौ सरुमण्वत्कस्तया देव्या कृतादरः ॥ ९६ ॥
सोऽस्याः प्रोत्साहविश्लेषदुःखं यावद् व्यपोहति ।
तावत् पद्मावतीपार्श्वे प्रययुस्ते महत्तराः ॥ ९७ ॥
'आगताऽऽवन्तिका देवि ! किमप्यस्मान् विहाय तु ।
प्रविष्टा राजपुत्रस्य गृहं गोपालकस्य सा' ॥ ९८ ॥
इति पद्मावती सा तैर्विज्ञप्ता स्वमहत्तरैः ।
वत्सेश्वराग्रे साशङ्का तानेवं प्रत्यभाषत ॥ ९९ ॥
'गच्छताऽऽवन्तिकां ब्रूथ निःक्षेपस्त्वं हि मे स्थिता ।
तदत्र किं ते, यत्राहं तत्रैवागम्यता'मिति ॥ १०० ॥
तच्छ्रुत्वा तेषु यातेषु राजा पद्मावतीं रहः ।
पप्रच्छ 'मालातिलकौ केनेमौ ते कृता'विति ॥ १०१ ॥
सावोचदथ 'मद्गेहे न्यस्ता विप्रेण केनचित् ।
आवन्तिकाभिधा यैषा, तस्याः शिल्पमिदं महत्' ॥ १०२ ॥
तच्छ्रुत्वैव च वत्सेशो गोपालगृहमाययौ ॥ १०३ ॥
प्रविवेश च गत्वा तद् द्वारस्थितमहत्तरम् ।
अन्तःस्थदेवीगोपालमन्त्रिद्वयवसन्तकम् ॥ १०४ ॥
तत्र वासवदत्तां तां ददर्श प्रोषितागताम् ॥ १०५ ॥
पपाताथ महीपृष्ठे स शोकविषविह्वलः ॥ १०६ ॥
ततः साऽप्यपतद् भूमौ गात्रैर्विरहपाण्डुरैः ।
विललाप च निन्दन्ती तदाचरितमात्मनः ॥ १०७ ॥
अथ तौ दम्पती शोकदीनौ रुरुदतुस्तथा ।

यौगन्धरायणोऽप्यासीद् बाष्पधौतमुखो यथा ॥ १०८ ॥
तथाविधं च तच्छ्रुत्वा काले कोलाहलं तदा ।
पद्मावत्यपि तत्रैव साकुला तमुपाययौ ॥ १०६ ॥
क्रमादवगतार्था च राजवासवदत्तयोः ।
तुल्यावस्थैव साऽप्यासीत् स्निग्धमुग्धा हि सत्स्त्रियः॥ ११० ॥
मगधेशसुतालाभात्तव साम्राज्यकाङ्क्षिणा ।
कृतमेतन्मया देव ! देव्या दोषो न कश्चन ॥ ११२ ॥
इयं त्वस्याः सपत्न्येव प्रवासे शीलसाक्षिणी ।
इत्युवाचाथ वत्सेशं धीरो यौगन्धरायणः ॥ ११३ ॥
'अहमत्र विशाम्यग्नावस्याः शुद्धिप्रकाशने' ।
इति पद्मावती तत्र जगादाऽमत्सराशया ॥ ११४ ॥
'अहमेवापराध्यामि यत्कृते सुमहानयम् ।
सोढो देव्यापि हि क्लेश' इति राजाऽप्यभाषत ॥ ११५ ॥
'अग्निप्रवेशः कार्यो मे राज्ञो हृदयशुद्धये' ।
इति वासवदत्ता च बभाषे बद्धनिश्चया ॥ ११६ ॥
ततः स कृतिनां धुर्यो धीमान् यौगन्धरायणः ।
आचम्य प्राङ्मुखः शुद्ध इति वाचमुदैरयत् ॥ ११७ ॥
'यद्यहं हितकृद् राज्ञो देवी शुद्धिमती यदि ।
ब्रूत भो ! लोकपालास्तन्न चेद् देहं त्यजाम्यहम्' ॥ ११८ ॥
इत्युक्त्वा विरते तस्मिन्दिव्या वागुदभूदियम् ।
'धन्यस्त्वं नृपते ! यस्य मन्त्री यौगन्धरायणः ॥ ११६ ॥
यस्य वासवदत्ता च भार्या प्राग्जन्मदेवता ।
न दोषः कश्चिदेतस्या' इत्युक्त्वा वागुपारमत् ॥ १२० ॥
दधदथ नृपतिः स मूर्तिमत्यौ निकटगते रतिनिर्वृती इवोभे ।
अनुदिनसहवाससानुरागे निजदयिते परमुत्सवं बभार ॥ १२३ ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे
लावाणकलम्बके द्वितीयस्तरङ्गः ।

## स्वप्नवासवदत्तस्य कथासारः ।

स्वप्नवासवदत्ताख्यस्य नाटकस्य प्रणेता कविर्भासस्तदा प्रसिद्धमैतिहासिकं वृत्तमशिश्रियत्। तदिदमुपाख्यानं छन्दोमयं बृहत्कथामञ्जर्यां कथासरित्सागरेऽप्युपलभ्यते। भवभूतेरुत्तररामचरितमिव तदेतत्स्वप्नवासवदत्तं श्रीमतो भासस्य प्रतिज्ञायौगन्धरायणस्योत्तरार्धमिवोपलक्ष्यते। तत्रत्यश्च कथाभागोऽयं प्रत्यङ्कं संक्षेपेण पाठकानां सौकर्याय विद्यार्थिनामुपकृतये च 'कथासार' नाम्ना समुपस्थाप्यते। महाकवेः परिचयादिविषये तु यद् यावल्लेखनीयं तत्तावत्सर्वं भूमिकायां न्यरूप्यत, तदिदं तत एवावगन्तव्यमिति निवेद्य प्रस्तूयते कथासारः।

### प्रथमाङ्के—

प्रथमं सूत्रधारः प्रविश्य बलरामस्य भुजाभ्यां रक्षणं निर्दिश्य उदयन—वासवदत्ता-पद्मावती-वसन्तकशब्दानामभिनयप्रधानपात्रभूतानां सूचनमपि विधाय समुपस्थितान्सामाजिकान् किञ्चित्कथयितुमना नेपथ्यगतोत्सारणादिशब्दश्रवणोद्घोषणपुरस्सरं मगधराजकन्यानुगामिभृत्यजनेन तपस्विसमूहोत्सारणं सूचयन् रङ्गमञ्चादपसरति। ततो भटैरुत्सार्यते तपस्विवर्गः, उदयनमन्त्री यौगन्धरायणः परिगृहीतपरिव्राजकवेषः सह वासवदत्तयावन्तिकावेषधारिण्या समेत्य वनेऽपि पुर इवोत्सारणादिकं पश्यन् स्वापमानजनितक्लेशासहिष्णुतया व्यथितां वासवदत्तां सान्त्वयित्वा काञ्चुकीयनिषिद्धोत्सारणयोर्भटयोर्निर्गतयोराश्रमस्थां महाराजदर्शकमातरं महादेवीमभिगम्य प्रणम्य ततो लब्धाशीर्गृहं प्रति प्रतिष्ठमानाऽप्यद्यात्रैव निवत्स्यति महाराजस्य भगिनी पद्मावतीति वृत्तान्तमुपलभ्य मनसिकृत्य च 'पुष्पकभद्रादिज्योतिर्वित्समादिष्टा स्वामिनो भाविनी देवीयं'मिति स्वीयं कार्यजातमेतया सेत्स्यतीति जानन्, तापसीं प्रणम्य तपोवने तदनुज्ञातां तपस्विजनाऽभिलषितवस्तुवितरणसमुत्सुकां पद्मावतीं समुचितावसरज्ञतया तत्रैव तस्या एव सन्निधौ कल्पितस्वीयभगिनीसम्बन्धां वासवदत्तां न्यासीकर्तुं प्रार्थयत। पद्मावत्या च तत्प्रतिपन्नम्। ततः प्रस्थातुकाम एव यौगन्धरायणे तत्रैव कश्चिद् ब्रह्मचारी समागत्य किञ्चिद्विश्रम्य प्राप्तातिथ्योऽनुयुक्तश्च यौगन्धरायणेन ब्रूते—वत्सेषु लावाणकाख्ये ग्रामे वेदार्थानुसन्धानपरो निवसन्नहं कदाचित्तत्रत्ये राज्ञि मृगयार्थमुदयने निष्क्रान्ते तदीया पत्नी वासवदत्ताऽवन्तिराजपुत्री ग्रामदाहेन दग्धा, तस्मिन्नेवावसरे तामुद्धर्तुमिच्छुस्तदर्थं कृतप्रयत्नः सचिवो यौगन्धरायणोऽपि वह्नौ निपत्य नामशेषतामगात्। मृगयातः प्रतिनिवृत्तेन राज्ञैतदवबुध्य सहसा तत्रैव प्राणान्परित्यक्तुमैष्यत, परं मन्त्रिभिर्महता यत्नेन निवारितो मुहुर्मुहुर्मोहमुपगतो कमण्वता प्रकृतिमापा-

